विश्वकद्रुः : ( रुदन् ) मर्षयतु देव !

मूषकराजः : ( मन्दं मन्दं विहसन् ) विश्वकद्रो ! उत्तिष्ठ । अन्येऽपि तवोत्कर्षं वाञ्छन्तः परितः परिभ्रमन्ति । भेदरूपिणी मूषकनीतिः प्रदर्शिता । मा भैषीः । त्वं मे सुहृद् । गच्छ । तथा कुरु, येन मूषकनीतिः विकासं यातु ।

विश्वकद्रुः : प्रतिजाने । ( चरणौ स्पृशति )

( ततो गच्छति मूषकराजे
अपरेण पथा विश्वकद्रुरपि निष्क्रान्तः )

इति प्रथमं दृश्यम्

---

विश्वकद्रु : ( रोता हुआ ) देव ! क्षमा करें ।

मूषकराज : ( मुसकराता हुआ ) विश्वकद्रु ! उठो । तुम्हारे उत्कर्ष को चाहने वाले दूसरे लोग भी इर्द गिर्द घूम रहे हैं । यह तो भेद रूप वाली मूषकनीति का प्रदर्शन किया है । मत डरो । तुम मेरे मित्र हो । जावो । ऐसा करो जिससे मूषकनीति का विकास हो ।

विश्वकद्रु : प्रतिज्ञा करता हूँ । ( चरण छूता है )

( मूषकराज के जाने पर
दूसरे मार्ग से विश्वकद्रु भी चला जाता है )

प्रथम दृश्य समाप्त



## द्वितीयं दृश्यम्

## स्थानम्—सम्मेलनकक्ष:

( पृथङ्मार्गेण द्वौ मूषकौ प्रविशत: )

**प्रथम:** : अरे ! त्वं क: ?

**द्वितीय:** : अरे ! त्वं क: ?

**प्रथम:** : न जानासि महाराजस्य मूषकराजस्य श्यालं माम् उत्कटगन्धम् ?

**द्वितीय:** : अरे ! किं मां न जानासि महाराजमहिष्या: गिरिकाया: श्यालं तीक्ष्णदन्तं नाम ?

**उत्कटगन्ध:** : अरे मूर्ख ! किं स्त्रिया अपि श्यालो भवति ?

**तीक्ष्णदन्त:** : कथं न भवति ? महाराजश्यालो भूत्वा महाराज्ञीश्यालं न जानासि ? किं प्रतिपादयामि ?

---

## द्वितीय दृश्य

## स्थान – सम्मेलन कक्ष

( भिन्न भिन्न मार्ग से दो मूषक आते हैं )

पहला : अरे ! तुम कौन हो ?

दूसरा : अरे ! तुम कौन हो ?

पहला : महाराज मूषकराज के साले मुझ उत्कटगन्ध को नहीं जानते हो ?

दूसरा : अरे ! क्या महाराज की पत्नी गिरिका के साले मुझ तीक्ष्णदन्त को नहीं जानते हो ?

उत्कटगन्ध : अरे मूर्ख ! क्या स्त्री का भी साला होता है ?

तीक्ष्णदन्त : क्यों नहीं होता है ? महाराज के साले होकर महारानी के साले को नहीं जानते हैं ? क्या सिद्ध करूँ ?

उत्कटगन्धः : यदि प्रतिपादयितुं न क्षमः तर्हि ते दन्तान् त्रोटयिष्यामि । येन मोदकेषु ममैवाधिकारो भवेत् ।

तीक्ष्णदन्तः : शृणु रे बालिश ! उदयनगिरः पञ्चदिनानि अधीत्य समाघ्राय च प्लेटोसिद्धान्तम् आगतः तीक्ष्णदन्तोऽहम् । प्रतिपादयामि ।

उत्कटगन्धः : प्रतिपादय । अन्यथा मे शिरस्ते लगुडं ताडयिष्यति ।

तीक्ष्णदन्तः : ब्रूहि । नरस्य स्त्री नारी' इति व्युत्पत्त्या विधवा कुमारिका वा नारी अस्ति किम् ?

उत्कटगन्धः : अरे ! तत्र नरत्वजातिविशिष्टा स्त्री नारी भवति, मूर्ख !

तीक्ष्णदन्तः : परममूर्ख ! तथैव श्यालत्वविशिष्टा स्त्री श्याली भवति । न तु श्यालस्य स्त्री श्याली । श्यालस्य भगिनी अस्ति श्याली केलिकञ्चुका । श्यालो हि नाम—कस्यचित्

उत्कटगन्ध : यदि प्रतिपादन करने में समर्थ नहीं होगे तो तुम्हारे दाँतों को तोड़ दूंगा, जिससे लड्डुओं पर मेरा ही अधिकार हो जाय ।

तीक्ष्णदन्त : सुनो मूर्ख ! उदयन की वाणी को पाँच दिन पढ़कर तथा प्लेटो के सिद्धान्त को सूंघ कर आया हुआ मैं तीक्ष्णदन्त हूँ । प्रतिपादन कर रहा हूँ ।

उत्कटगन्ध : करो प्रतिपादन । नहीं तो मेरा सिर तुम्हारी लाठी को ठोकर दे देगा ।

तीक्ष्णदन्त : बोलो । 'नर की स्त्री को नारी कहते हैं' इस व्युत्पत्ति से विधवा या कुमारी क्या नारी कही जायेगी ?

उत्कटगन्ध : अरे मूर्ख ! वहाँ नर की जाति से युक्त स्त्री को नारी कहते हैं ।

तीक्ष्णदन्त : परममूर्ख ! उसी प्रकार श्याल की जाति से युक्त स्त्री को श्याली ( साली ) कहते हैं, न कि श्याल की स्त्री साली कही जाती है । साले की बहिन साली कहलाती है, जो केलिकञ्चुका होती है । श्याल उसे कहते हैं जो किसी पुरुष या स्त्री का

कस्याश्चिद् । वा प्रेष्ठः । यथा पत्न्याः भ्राता पत्युः प्रेष्ठो भवति तथैव पत्युः भ्राता अपि पत्न्याः प्रेष्ठो भवति । अतः श्यालोऽस्मि ।

उत्कटगन्धः : रे श्याल ! त्वं महाराजस्य भ्राताऽसि ?

तीक्ष्णदन्तः : यथा त्वं प्रेष्ठः, अतः श्यालः तथाऽहमपि प्रेष्ठः । अतः श्यालः ।

उत्कटगन्धः : रे वावदूक ! कथं त्वं श्यालः ? किं राज्ञा कुत्रचित् नियुक्तोऽसि ?

तीक्ष्णदन्तः : रे दुष्ट ! कथमात्मानम् अभिमानगर्ते निपातयसि । त्वं सम्पत्तिसहायकः, अहं तु परिषत्सहायकोऽस्मि । अधुना अत्र ते कार्यं निष्पन्नम् । मम कार्यं प्रारभ्यते ।

उत्कटगन्धः : आ एवं किलैतत् । (आकर्ण्य तूर्यध्वनिम् - आत्मगतम्) अस्ति महाराजागमनवेला । (विलोक्य) प्रतिनिधयोऽपि

प्रिय होता है । जिस प्रकार पत्नी का भाई पति का प्यारा होता है उसी प्रकार पति का भाई पत्नी को भी प्यारा होता है । इसलिए साला हूँ ।

उत्कटगन्ध : अरे साले ! तुम महाराज के भाई हो ?

तीक्ष्णदन्त : जैसे तुम प्यारे हो, इसलिए साला हो वैसे मैं भी प्यारा हूँ, इसलिए साला हूँ ।

उत्कटगन्ध : अरे बवाली ! कैसे तुम साले हो ? क्या राजा के द्वारा कहीं नियुक्त हो ?

तीक्ष्णदन्त : अरे दुष्ट ! अभिमानरूपी गड्ढे में क्यों अपने को गिरा रहे हो। तुम सम्पत्तिसहायक हो। मैं तो परिषत्-सहायक हूँ। इस समय यहाँ तुम्हारा कार्य समाप्त है । मेरा कार्य प्रारम्भ होगा ।

उत्कटगन्ध : अच्छा, यह ऐसी बात है। ( बिगुल की ध्वनि सुनकर आत्मगत ) महाराज के आने का समय है। ( देखकर )

आयान्त्येव। (प्रकाशम्) रे श्यालश्याल ! कुरु व्यवस्थाम्। भगिनीपतिरायाति। तस्मै निवेदयितुं साधयामि।

(इति निष्क्रान्तः)

(ततः प्रविशन्ति प्रतिनिधयः। अनन्तरं महाराजश्च दौवारिकेणानुगम्यमानः प्रविशति)

(मूषकराजे सिंहासनमुपविष्टे सर्वे उपविशन्ति)

मूषकराजः : तीक्ष्णदन्त ! प्रस्तूयताम् कृत्यम्।

तीक्ष्णदन्तः : महाराज ! स्वदेशगानान्तरं तन्निवेदयामि।

मूषकराजः : त्वर्यताम्।

(ततः प्रविशन्ति गायकेन सह वादकाः)

(महाराजं नमस्कृत्य गायति गायकः)

प्रतिनिधि भी आ ही रहे हैं। (प्रकाश में) अरे साले के साले ! व्यवस्था करो। बहनोई साहब आ रहे हैं। उनसे बताने के लिए मैं भी जा रहा हूँ।

(ऐसा कह कर चला गया)

(प्रतिनिधि आने लगे। अनन्तर दौवारिक के साथ महाराज का प्रवेश होता है।)

(सिंहासन पर मूषकराज के बैठ जाने पर सभी प्रतिनिधि बैठते हैं)

मूषकराज : तीक्ष्णदन्त ! कार्य प्रारम्भ करो।

तीक्ष्णदन्त : महाराज ! स्वदेश गान के बाद उसे निवेदित करूँगा।

मूषकराज : शीघ्रता करो।

(गायकों के साथ वादकों का प्रवेश)

(महाराज को नमस्कार करके गायक गाता है)

जय जय मूषकदेश ।
अघटितघटन सुघटविघटन स्वीकृतजनतादेश ।।
परमतिकलितराज्यसञ्चालन गर्हितमुनिमतलेश
रक्षतु नो बहुवादप्रचारक हरिजनरक्षकदेश ।।१६।।

मूषकराजः : साधु साधु । तीक्ष्णदन्त ! आगामिनि समारोहे गायकोऽयम् सङ्गीतविशारदपदव्या विभूषयितव्यः ।

तीक्ष्णदन्तः : यथाज्ञापयति महाराजः । ( किञ्चिद् विरम्य ) जयतु महाराजः । 'पूर्वं निखिलब्रह्माण्डमूषकाधिपतिभ्यः भवद्भ्यः मूषकसिद्धान्तस्य कानिचिद् रहस्यानि प्रकाशतामायास्यन्ति । अनन्तरम् एतेषां प्रतिनिधीनां वैदुष्यं समालोचनीयम्' इति भवद्भिराज्ञप्तोऽस्मि । अत्र भवन्तः एव प्रमाणम् ।

हे मूषकदेश ! तुम्हारी जय हो, जय हो । तुम अघटित को घटाने वाले, सुघट को मिटाने वाले हो । तुमने जनता का आदेश स्वीकार कर लिया है । दूसरों की बुद्धि से राज्य का संचालन करने वाले तथा अपने मुनियों के मत के किसी भाग की भी निन्दा करनेवाले, बहुत वादों का प्रचार करनेवाले तथा बुद्धि पौरुष विहीनों की रक्षा करनेवाले देश ! हम लोगों की भी रक्षा करो ।

मूषकराज : साधु साधु ! तीक्ष्णदन्त ! आगामी समारोह में इस गायक को संगीतविशारद की पदवी से विभूषित किया जाय ।

तीक्ष्णदन्त : महाराज की जैसी आज्ञा । ( कुछ रुककर ) महाराज की जय हो । 'पहले सम्पूर्ण ब्रह्माण्ड के मूषकों के स्वामी आप मूषक-सिद्धान्त के कुछ रहस्यों को स्पष्ट करेंगे । पश्चात् इन प्रति-निधियों के पाण्डित्य की समीक्षा की जायगी' ऐसा आपने कहा था । अब आप ही प्रमाण हैं ।

मूषकराजः : साधु वत्स ! आज्ञापालकोऽसि सावधानोऽसि। नैतस्यां परिषदि कुतश्चिद् विडालागमनशङ्काप्यस्ति। तथापि नाहं विवक्षुरस्मि। शिरसि मे महती पीडा वर्तते। अतः एकस्यैब कस्यचिद् विदेशस्थप्रतिनिधेः कृतस्य प्रचारस्य परिणामं द्रक्ष्यामि।

तीक्ष्णदन्तः : यथाज्ञापयति देवः। (एकं प्रतिनिधिम् अङ्गुल्या निर्दिशन्) श्रीमन्तो हिज् एक्सेलेन्सी डा० एल० जे० महाशयाः ! निवेदयन्तु स्वोपलब्धि तमोधौतज्ञानकणेभ्यः महाराजेभ्यः।

(तत उत्तिष्ठति डा० एल० जे० महाशयः)

मूषकराजः : अरे ललजिजह्व ! कथं त्वं श्वेत इव दृश्यसे ?

अलजिजह्वः : (प्रणमन् संकोचं नाटयंश्च) महाराज ! नाहं श्वा। मूषकोऽहम्।

मूषकराज : साधु वत्स ! आज्ञापालक हो। सावधान हो। इस सभा में कहीं से विडाल के आगमन की शङ्का भी नहीं है। फिर भी मैं कुछ कहना नहीं चाहता हूँ। मेरे सिर में बड़ी पीडा है। इसलिए किसी एक, विदेश में रहने वाले प्रतिनिधि से सम्बद्ध किये गये प्रचार का परिणाम जानूंगा।

तीक्ष्णदन्त : जैसी आपकी आज्ञा देव ! (एक प्रतिनिधि की ओर अंगुलि दिखाते हुये) श्रीमान् हिज एक्सेलेन्सी डाक्टर एल० जे० महाशय ! आप अपनी उपलब्धि को अन्धकार के द्वारा प्रकाश के कणों तक को धो डालने वाले महाराज को बतायें।

(डा० एल० जे० महाशय उठते हैं)

मूषकराज : अरे ललजिजह्व ! तुम श्वेत जैसा कैसे दिखाई दे रहे हो ?

ललजिजह्व : (प्रणाम करता हुआ तथा संकोच का अभिनय करता हुआ) महाराज ! मैं श्वान नहीं हूँ। मूषक हूँ।

**मूषकराजः** : साधु । बुद्धिमानसि । श्वा इतः श्वेतः इति न मेऽभिप्रायः । शुभ्र इति । त्वं तु ( किञ्चित् चिन्तयन् ) कृष्ण आसीत् ?

**ललज्जिह्वः** : क्षम्यताम् महाराज ! नात्र मे दोषः । विदेशीयाः महाराजस्य आज्ञां शिरसा वहन्ति । तथापि ते कथयन्ति— पूर्वं श्वेतमूषकैः कृष्णमूषकाः पराजिताः । अधुनाऽपि एकमेव श्वेतमूषकं दृष्ट्वा गेहे कृष्णाः पलायन्ते । मूषकराजस्य आदरं कुर्वन्तोऽपि वयं नीतिश्रवणे श्वेतानामेव नयं श्रोष्यामः । 'प्रचारः करणीय एव' इति भवदाज्ञायाः उल्लङ्घनं मा भूत् इति हेतोः वाङ्मनसचिकित्सया श्वेतो जातः । अधुना तेषां विश्वस्तोप्यऽस्मि ।

**मूषकराजः** : ( हर्षं दर्शयन् ) साधु । ललज्जिह्व । साधु । स्वकार्यं

मूषकराज : साधु । बुद्धिमान् हो । मेरा अभिप्राय श्वा+इतः श्वेतः से नहीं था । शुभ्र वर्ण से था । तुम तो ( कुछ सोचता हुआ ) काले थे ?

ललज्जिह्व : क्षमा करें, महाराज । इसमें मेरा दोष नहीं है । विदेशी लोग महाराज की आज्ञा को स्वीकार करते हैं तथापि वे कहते हैं कि "प्राचीन काल में श्वेतमूषकों से काले मूषक पराजित हुये थे । आज भी घर में एक भी सफेद चूहा को देखकर काले चूहे भाग जाते हैं । मूषकराज का आदर करते हुये भी नीतिश्रवण में श्वेतों की ही नीति को सुनेंगे । 'प्रचार करना ही है' आपकी यह आज्ञा उल्लंघित न हो जाय इसलिए वाणी और मन की चिकित्सा से श्वेत हो गया हूँ । इस समय उनका विश्वस्त भी हो गया हूँ ।

मूषकराज : ( हर्ष दिखाते हुये ) साधु, ललजिजह्व ! धन्यवाद । बुद्धिमान् को अपना कार्य सिद्ध करना चाहिये । क्योंकि कार्य का नष्ट

साधयेत् धीमान् कार्यभ्रंशो हि मूर्खता। परेषां निकृष्टताम् अपि गृहीत्वा यदि स्वकार्यं सिद्ध्येत्, तर्हि न दोषः। त्वत्प्रतिवेदनं पश्चात् श्रोष्यामि। ( तीक्ष्णदन्तं पश्यन् ) तीक्ष्णदन्त ! अस्मिन् देशे मूषकसिद्धान्तप्रचारस्य परिणामं दिदृक्षे।

**तीक्ष्णदन्तः** : यथाज्ञापयति महाराजः। कं समुपस्थापयामि ?

**मूषकराजः** : अस्मत्प्रधानशत्रुं कृषकं द्रष्टुमिच्छामि।

**तीक्ष्णदन्तः** : यथाज्ञापयति महाराजः ( किञ्चिद्दूरस्थं कोशगुप्तं विलोक्य ) कोशगुप्त ! कृषकं प्रवेशय।

( कोशगुप्तो बहिर्गच्छति पुनः प्रविशति एकेन कृषकेण सह। कृषकः महाराजं प्रणमति। )

**मूषकराजः** : कोऽयं तीक्ष्णदन्त !

**तीक्ष्णदन्तः** : महाराज ! अयमेव कृषकः।

होना ही मूर्खता है। दूसरों की नीचता को भी ग्रहण करके यदि अपना कार्य ठीक हो जाय तो कोई दोष नहीं है। तुम्हारी रपट बाद में सुनूँगा। ( तीक्ष्णदन्त को देखता हुआ ) तीक्ष्णदन्त ! इस देश में किये गये मूषक सिद्धान्त के प्रचार का परिणाम देखना चाहूँगा।

तीक्ष्णदन्त : जैसी महाराज की आज्ञा। किसको उपस्थित कराऊँ।

मूषकराज : अपने प्रधान शत्रु कृषक को देखना चाहता हूँ।

तीक्ष्णदन्त : जैसी महाराज की आज्ञा। ( कुछ दूर पर स्थित कोशगुप्त को देखकर ) कोशगुप्त ! कृषक को भेजो।

( कोशगुप्त बाहर जाता है तथा एक कृषक के साथ पुनः आता है ? कृषक महाराज को प्रणाम करता है। )

मूषकराज : तीक्ष्णदन्त ! यह कौन है ?

तीक्ष्णदन्त : महाराज ! यही कृषक है।

मूषकराजः : अवस्था चास्य का ?

तीक्ष्णदन्तः : ( मनसि ) अवस्था ! ( प्रकाशम् )

ऋणं विकासाय कृषेर्गृहीतं,
विक्रीय भूमिं तदृणं निरस्तम्।
स्वोत्पाद्यमूल्यं परिलभ्य चाल्पं,
नतेन मूर्ध्ना कृषकेण जीव्यते ।।१७।।

मूषकराजः : वर्द्धन्ताम् अस्मत्कृषिसिद्धान्तप्रचारकाः, यैरयम् इमां दशां नीतः ( विरम्य ) अपसारय एनम्। एतेषां यो व्यवस्थां करोति तमधिकारिणं दिदृक्षे।

तीक्ष्णदन्तः : कोशगुप्त ! कञ्चित् अधिकारि-प्रवरं प्रवेशय।

[ ततः प्रविशति धृताङ्ग्लवेशः मुखसन्निविष्टचुरुटः कृतकुक्षिलघुदण्डः अधिकारी ]

मूषकराजः : तीक्ष्णदन्त ! त्वत्तोऽपि तीक्ष्णः कोऽयम् ?

मूषकराज : इसकी अवस्था क्या है ?

तीक्ष्णदन्त : ( मन में ) अवस्था ( प्रकाश में )

इसने कृषि के विकास के लिए ऋण लिया और भूमि को ही बेचकर ऋण चुकाया। अपने से उत्पादित वस्तुओं का स्वल्प मूल्य पाकर सिर झुकाये हुये यह कृषक जी रहा है।

मूषकराज : हमारे कृषि सिद्धान्त के प्रचारक उन्नत हों, जिनके द्वारा यह इस दशा को पहुँचा दिया गया है। ( रुक कर ) हटाओ इसे। जो इनकी व्यवस्था करता है, उस अधिकारी को देखना चाहता हूँ।

तीक्ष्णदन्त : कोशगुप्त ! किसी श्रेष्ठ अधिकारी को भेजो।

[ आङ्ग्लवेशधारी मुख में चुरुट दबाये काँख में रूल लिये एक अधिकारी का प्रवेश ]

मूषकराज : तीक्ष्णदन्त ! तुमसे भी तीक्ष्ण यह कौन है ?

**तीक्ष्णदन्तः** : महाराज ! अयं सर्वोच्चो—धिकारी ।

**मूषकराजः** : कोऽस्य परिचयः ? कश्चास्य सिद्धान्तः ? किं मूषकसिद्धान्तं स्वीकरोति अयम् ?

**तीक्ष्णदन्तः** : आम् श्रीमन् ! अतएव शासनेन अस्य जनसेवकविरुदम् अपहृत्य शासनसेवक इति नवा संज्ञा दत्ता । अस्य ( किञ्चिद् विरमति )

**मूषकराजः** : शीघ्रं कथय ।

**तीक्ष्णदन्तः** : अस्य नैसर्गिकी मान्यता अस्ति—

योग्यत्वं ननु यस्य जन्मसमयाद् धात्रा प्रमाणीकृतम्,
कार्यं यस्य भवेत्कदाचिदपि नालोच्यं क्वचित् केनचित् ।
मानं तस्य विधेयमेव मनुजैरित्थं च जानाति यः
आई. ए. यस. नामिकां सुपदवीं बिभ्रन्नसौ राजते ।१८।

तीक्ष्णदन्त : महाराज ! यह सर्वोच्च अधिकारी है ।

मूषकराज : इसका परिचय ? इसका सिद्धान्त ? क्या यह मूषकसिद्धान्त को मानता है ?

तीक्ष्णदन्त : हाँ श्रीमन् ! इसीलिए शासन ने इसके जनसेवक ( **Civil Servant** ) उपाधि को हटाकर शासनसेवक ( **Administrative Servant** ) यह नई संज्ञा दे दी है । इसकी ( कुछ रुकता है )

मूषकराज : शीघ्र कहो ।

तीक्ष्णदन्त : इसकी स्वभावगत मान्यता है—

जिसकी योग्यता को जन्मकाल से ही ब्रह्मा ने प्रमाणित कर दिया है, जिसके कार्य की आलोचना कहीं भी, कभी भी किसी के द्वारा भी नहीं होनी चाहिये और जो यह मानता है कि सभी मनुष्यों को उसका मान करना ही चाहिये वह आई. ए. एस. पदवी धारण करने वाला यहाँ सुशोभित हो रहा है ।

मूषकराजः : साधु । किमस्य देशे आंग्लभाषा राष्ट्रभाषा ? यस्मादयं तदुपयुक्तां पदवीं धारयति ?

तीक्ष्णदन्तः : मैवं श्रीमन् ! पूर्वं श्वेतैर्मूषकैः शासितोऽस्य देशः । तामेव सरणिम् अद्यापि अङ्गीकरोति अस्य देशः । अनेन मूषक-सिद्धान्तप्रचारे सौकर्यं भवति ।

मूषकराजः : एवं तर्हि चिरं वर्द्धताम् आंग्लभाषा, या सर्वान् मूषकीकरोति । ( विरम्य ) अपरं कञ्चिद् आरक्षिणं दिदृक्षे, यत्साहाय्येन मूषकाः सुरक्षिताः ।

तीक्ष्णदन्तः : कोशगुप्त ! आरक्षिणं प्रवेशय ।

( ततः प्रविशति आरक्षी )

मूषकराजः : तीक्ष्णदन्त ! कोऽयम् ?

तीक्ष्णदन्तः : अयं पुलिशः ।

मूषकराज : साधु ! इसके देश में राष्ट्रभाषा क्या आंग्ल भाषा है ? जिससे यह उस भाषा की पदवी धारण करता है ?

तीक्ष्णदन्त : ऐसा नहीं है श्रीमन् ! पहले सफेद मूषकों के द्वारा इसका देश शासित था । आज भी उसी पद्धति को इसका देश स्वीकार करता है । मूषक सिद्धान्त के प्रचार में इससे सहायता प्राप्त होती है ।

मूषकराज : ऐसी बात है, तब तो आँग्ल भाषा सदा उन्नति शील रहे क्योंकि वह सब को मूषक बना रही है । ( कुछ रुककर ) अब किसी आरक्षी को देखना चाहता हूँ, जिसकी सहायता से मूषक सुरक्षित होते हैं ।

तीक्ष्णदन्त : कोशगुप्त ! आरक्षी को बुलाओ ।

[ आरक्षी आता है ]

मूषकराज : तीक्ष्णदन्त ! यह कौन है ?

तीक्ष्णदन्त : यह पूलिश है ।

मूषकराजः : फूलिशः किम् ?

तीक्ष्णदन्तः : नहि श्रीमन् ! पुलिस इति। आरक्षिकृते अयम् आङ्गलशब्दः।

मूषकराजः : आम्। अयं कथं विचारयति ?

तीक्ष्णदन्तः : अस्य देशस्य नेतारः स्वातन्त्र्यसंग्रामकाले एतानुन्मूलयितुं कृतप्रतिज्ञा आसन्। परन्तु तयैव पद्धत्या एते अद्यापि जीवन्ति। अतः एते कथयन्ति—

मूषकराजः : किम् ?

तीक्ष्णदन्तः : नेतारः कृतनिश्चयाः प्रवयसः स्वातन्त्र्ययुद्धे पुराऽ
स्मानुन्मूलयितुं, गता विफलतां, भग्नं न रोमाऽपि नः।
निन्दन्तोऽपि जना भृशं विवशतो रक्षार्थमायान्ति नो
गोपायेम दधीमहि स्वविरतिं वाऽऽरक्षिणः स्मो वयम्।१९।

मूषकराज : फूलिश क्या कहलाता है ?

तीक्ष्णदन्त : श्रीमन् ! ऐसा नहीं। पुलिस। आरक्षी के लिए यह अंग्रेजी शब्द है।

मूषकराज : अच्छा। यह किस प्रकार से सोचता है ?

तीक्ष्णदन्त : इसके देश के नेता स्वतन्त्रता संग्राम के समय इन्हें हटाने के लिए प्रतिज्ञा कर चुके थे। पर ये आज भी उसी पद्धति से चल रहे हैं। इसलिए ये कहते हैं—

मूषकराज : क्या ?

तीक्ष्णदन्त : पहले स्वतन्त्रता युद्ध में परिपक्व नेता लोग हमें हटाने के लिए वचनबद्ध थे पर वे विफल हो गये और हम लोगों का एक रोम भी नहीं टूटा। प्रजा हमारी निन्दा करते हुये भी रक्षा के लिए हमारे पास आती है। हम चाहे उसकी रक्षा करें या उससे विरक्त हो जाँय, आरक्षी तो हम ही हैं।

मूषकराजः : साधु। अनेनैव विचारेण अबला अपि नारी प्रबला साहसिका भविष्यति। ( तीक्ष्णदन्तं पश्यन् ) तीक्ष्णदन्त ! एतान् विवर्णमुखमण्डलान् परन्तु अन्तरुत्साहभरितान् अवलोक्य प्रतीयते—यदस्य देशे न राज्यतन्त्रम्। नेतारो भवेयुः।

तीक्ष्णदन्तः : एवमेव भगवन्।

मूषकराजः : तर्हि तेषामन्यतमम् आकारय।

तीक्ष्णदन्तः : कोशगुप्त ! उपस्थापय कञ्चिन्नेतारम्।

( ततः प्रविशति धृतधौतखादीवस्त्रः कश्चिद् युवा नेता )

तीक्ष्णदन्तः : अयम् अपि नेता पुरतः स्थितः महाराज !

मूषकराजः : अभिनेता कथमानीतः ?

तीक्ष्णदन्तः : नायम् अभिनेता। अयं तु......

मूषकराज : बहुत ठीक। इस विचार से तो निर्बल स्त्रियाँ भी प्रबल डाकू बनेंगी। ( तीक्ष्णदन्त की ओर देखता हुआ ) तीक्ष्णदन्त ! बाहर से मलिनमुखवाले पर अन्दर से उत्साहयुक्त इन सबों को देखकर ऐसा लगता है कि इनके देश में राज्यतन्त्र नहीं है। नेता लोग हो सकते हैं।

तीक्ष्णदन्त : ऐसा ही है, भगवन् !

मूषकराज : तो उनमें से किसी को बुलाओ।

तीक्ष्णदन्त : कोशगुप्त ! किसी नेता को लाओ।

( धुली हुई खादी पहने किसी युवा नेता का प्रवेश )

तीक्ष्णदन्त : यह नेता भी सामने उपस्थित है महाराज !

मूषकराज : अभिनेता क्यों लाया गया ?

तीक्ष्णदन्त : यह अभिनेता नहीं है। यह तो...........

विद्या नाधिगता पुराणलिखिता सेवा कृता नो गुरोः
बाल्यत्वं च न लङ्घितं परमहो प्राप्तानुभूतिः परा।
कार्याकार्यविचारणैकविषये नीतिर्व्यवस्थाप्यते
येनैवं स विशेषबुद्धिभरितो नेता पुरः राजते ॥२०॥

मूषकराजः : साधु। तीक्ष्णदन्त ! कृषका अधिकारिणः आरक्षिणः नेतारो वा सर्वे वृत्तपत्राणि पठन्ति। यदि वृत्तपत्रैः वस्तुतः शासनं समालोच्यते तर्हि सर्वे व्यवस्थिता भविष्यन्ति। पत्रकारम् आनय।

तीक्ष्णदन्तः : ( कोशगुप्तं संज्ञापयन् ) आयात्येव महाराज।

( ततः प्रविशति सोपनेत्रो हस्तधृतवृत्तपत्रः पत्रकारः )

अयमागतः पत्रकारः।

मूषकराजः : अयं कथं व्यवहरति ? अस्य कः सिद्धान्तः ?

जिसने पुराणलिखित विद्या नहीं पढ़ी, न तो गुरु की सेवा ही की, न ही बचपना को पार किया पर अपरोक्ष अनुभूति की प्राप्ति कर ली है तथा जिसके द्वारा कर्त्तव्य एवम् अकर्त्तव्य की विचारणा से युक्त विषय में नीति का निर्धारण किया जाता है वह विशेष बुद्धि से युक्त नेता आपके सामने सुशोभित हो रहा है।

मूषकराज : साधु। तीक्ष्णदन्त ! कृषक, वधिकारी, आरक्षी तथा नेता सभी समाचार पत्र पढ़ते हैं। यदि वृत्तपत्र शासन की सही आलोचना करें तो सभी व्यवस्थित हो सकते हैं। पत्रकार को उपस्थित करो।

तीक्ष्णदन्त : ( कोशगुप्त को संकेत देता हुआ ) आ ही रहा है, महाराज !

( हाथ में समाचारपत्र लिये चश्मा चढ़ाये पत्रकार का प्रवेश )

यह पत्रकार आ गया।

मूषकराज : यह कैसा व्यवहार करता है ? इसका सिद्धान्त क्या है ?

तीक्ष्णदन्तः : अयम् ? अस्य ?

न जानाति भावं विधाता कदाचित्
कदा लेखनी कस्य तुष्ट्याऽप्रतुष्ट्यै ।
प्रवृत्ता भवेदस्य सिद्धान्तहीना
वचोभिर्जनान् भ्रामयन् पत्रकारः ॥ २१ ॥

मूषकराजः : साधु, पत्रकार ! साधु । प्रतिगृहं प्रतिकार्यालयं पर्यटन्, इतस्ततः वृत्तं कर्तयन्, अदृष्टचरमपि स्वस्वामिनं बहु मानयन् त्वमेव वस्तुतः आखुप्रतिनिधिः । क्षणं पलायनम् क्षणम् उपस्थितिः, क्षणं कूर्दनम्, क्षणं व्यवस्थितिः । साधु । ( तीक्ष्णदन्तं पश्यन् ) तीक्ष्णदन्त ! विवादे समुपस्थिते अस्य देशस्य न्यायाधिकारी कथं वर्तते ?

तीक्ष्णदन्तः : महाराज ! स्वयमेव निभालयतु ।

तीक्ष्णदन्त : यह ? इसका ?

इसके भाव को तो ब्रह्मा भी नहीं जानते हैं। इसकी सिद्धान्त-हीन लेखनी कब किसकी प्रसन्नता या अप्रसन्नता के लिए चल देगी ( कौन जानता है ) । यह अपने वचनों से जनता को भ्रान्त करता हुआ पत्रकार है ।

मूषकराज : वाह पत्रकार ! वाह । प्रत्येक घर और कार्यालय में घूमते हुये, इधर उधर से समाचार कुतरते हुये, कभी न देखे गये अपने स्वामी को बहुत मानते हुये, तुम ही वस्तुतः मूषकों के प्रति-निधि हो । वाह ! ( तीक्ष्णदन्त की ओर देखता हुआ ) तीक्ष्ण-दन्त ! विवाद उपस्थित होने पर इस देश के न्यायाधिकारी कैसा बर्ताव करते हैं ?

तीक्ष्णदन्त : महाराज ! अपने ही देख लें ।

(कोशगुप्तं संज्ञापयति । ततः प्रविशति न्यायाधिकारी)
महाराज ! समागतो जजः ।

मूषकराजः : किम् ? अजाग्रजो जजः ? अजस्तु वलिप्रयोजनः ।

तीक्ष्णदन्तः : जजोऽपि वलिप्रयोजनः । कार्यपालकं तोषयन् अयं न्यायपालकः परस्परं मातृष्वषेयः । द्वित्रा एव अप्रसन्नतां प्रकटयन्तः पलायमाना वलिकर्मणि अप्रयुक्ता भवन्ति ।

मूषकराजः : तीक्ष्णदन्त ! इदन्तु नोचितम् । किमयं लघुतां नीतः ?

तीक्ष्णदन्तः : मैवं श्रीमन् ! अपवादं परित्यज्य अधुनाप्ययं भवन्नीतिमनुसरन् तुष्ट एव ।
कालातीतो न वादः समुचितविधिना निश्चितो वादविन्दुः
साक्ष्यं सम्यक्प्रदत्तं प्रतिनिधिभिरलं स्थापितो वादपक्षः ।

---

( कोशगुप्त को संकेत देता है । न्यायाधिकारी का प्रवेश )
महाराज ! जज आ गये ।

मूषकराज : क्या ! अज ( बकरे ) का बड़ा भाई, जज ? अज तो बलि के लिए होता है ।

तीक्ष्णदन्त : जज भी बलि के लिए होता है । कार्यपालक को तुष्ट रखता यह न्यायपालक परस्पर में मौसेरे भाई हैं । दो या तीन ही अप्रसन्नता दिखाते हुये भाग जाते हैं जो बलि के काम में नहीं लग पाते हैं ।

मूषकराज : तीक्ष्णदन्त ! यह तो ठीक नहीं है । क्या यह छोटा बन गया है ?

तीक्ष्णदन्त : नहीं श्रीमन् ! अपवाद को छोड़कर आज भी यह आपकी नीति के अनुसार तुष्ट ही है ।
'दावा समय से हुआ है । तनकीह भी ठीक तरह से बनी है । गवाही भी अच्छे ढंग से हुई है तथा वकीलों ने बहस भी ठीक से किया है । मगर इससे क्या रिजल्ट निकलेगा अगर मेरी

किन्त्वेभिः किं फलं स्याद् यदि न मम मतिः प्रेर्यतेऽ
न्यैरुपायैः
इत्थं बाढं प्रजल्पन् जजपदविदितो नूतनोऽयं कृतान्तः ।२२।

( ततः प्रविशति चिकित्सकः )

**मूषकराजः** : कोऽयमनाहूतः प्रविशति ? किमयं गदहा ?

**तीक्ष्णदन्तः** : अयं चिकित्सकः परन्तु वैद्यो न । डाक्टरोऽयम् । अयं गदं न हन्ति । स्वीयम् अर्थकाठिन्यं द्राक्तरति । अस्य परिचयस्तु लोके प्रहेलिकारूपेण प्रसिद्धा अस्ति ।

**मूषकराजः** : ( विस्फारितनेत्रः ) कथं प्रहेलिका ? कथय ताम् ।

**तीक्ष्णदन्तः** : प्रणम्यो जगत्यां क आत्मीय बुद्धया,
समं चायुषा कोऽस्ति वित्तस्य हर्ता ।
द्रुतं कस्य चित्तं क्वचिन्नार्तनादैः ? इति प्रहेलिका ।
उत्तरं त्वस्य—
अयं डाक्टरः कोऽपि नान्यो मनुष्यः ॥२३॥

बुद्धि किसी दूसरे उपायों से प्रेरित नहीं की जाती है' ऐसा दृढता से कहने वाला यह जज नाम वाला नया यमराज है ।

( उसी समय चिकित्सक आता है )

मूषकराज : बिना बुलाये यह कौन आ रहा है ? क्या यह गदहा है ?

तीक्ष्णदन्त : यह चिकित्सक है परन्तु वैद्य नहीं है । यह डाक्टर है । यह रोग को नहीं नष्ट करता है । अपने धन की कमी को शीघ्र दूर करता है । इसका परिचय लोक में पहेली के रूप में प्रसिद्ध है ।

मूषकराज : ( आँखें फाड़ता हुआ ) कैसी पहेली ? उसे कहो ।

तीक्ष्णदन्त : इस संसार में आत्मीय बुद्धि से कौन प्रणम्य है ? आयु के साथ धन का अपहरण कौन करता है ? तथा आर्तनाद से किसका चित्त पिघलता नहीं है ? यह पहेली है ।
इसका उत्तर है—यह डाक्टर है । कोई दूसरा मनुष्य नहीं है ।

## अशुद्धि शोधन

| पृष्ठ | पंक्ति | अशुद्धि | शुद्धरूप |
|---|---|---|---|
| ८ | १५ | होते भी | होते हुये भी |
| १० | २ | बहेत् | वहेत् |
| १३ | २० | Roand | Round |
| १८ | ९ | बङ्गा | वङ्गा |
| ३३ | १ | कस्याश्विद् । | कस्याश्चिद् |
| ३६ | ४ | एकस्यैब | एकस्यैव |
| ३७ | ४ | म दोषः | मे दोषः |
| ४१ | ६ | बर्द्धताम् | वर्द्धताम् |
| ४४ | १९ | वधिकारी | अधिकारी |
| ४५ | १२ | निमालयतु | निभालयतु |
| ४६ | ५ | मातृष्वषेयः | मातृष्वसेयः |
| ४८ | २२ | महराराज | महाराज |
| ४९ | २५ | वालों | वाले |
| ५२ | २४ | उसके | उनके |
| ५३ | १० | गृह्लन् | गृह्णन् |
| ५६ | ७ | परिपालने | प्रतिपालने |

( द्विः पठति )

**मूषकराजः** : साधु डाक्टर ! साधु । मूषका अपि केवलं धनं हरन्ति । त्वं तु प्राणानपि । ( तीक्ष्णदन्तं पश्यन् ) अत्र कथमभियन्तारः ?

**तीक्ष्णदन्तः** : ( आगच्छन्तम् अभियन्तारं पश्यन् ) महाराज ! स्वयमेव अवलोकयतु । स तु स्वयं जिघ्रन् आगच्छति । (अङ्गुल्या निर्दिशति )

( ततः प्रविशति अभियन्ता )

महाराज ! पश्यतु

प्राक् प्रारूपं पश्चाद् द्रव्यं किञ्चित् किञ्चित् तन्निर्माणं,<br>
जातो भ्रंशो भूयो द्रव्यं जल्पन् गृह्णन् वित्तं नाल्पम् ।<br>
जे. ई., ए. ई., ई. ई., सी, ई. रूपैर्लोके भ्राम्यन्नित्यम्,<br>
देशद्रव्यं मत्वा रिक्थं कार्ये लग्नो यन्ता चायम् ॥२४॥

---

( श्लोक को दो बार पढ़ता है )

**मूषकराज** : शाबास डाक्टर ! शाबास । मूषक भी केवल धन का हरण करते हैं । तुम तो प्राणों का भी । ( तीक्ष्णदन्त को देखता हुआ ) यहाँ इन्जीनियर कैसे हैं ?

**तीक्ष्णदन्त** : ( आते हुए इन्जीनियर को देखकर ) महाराज ! स्वयं देखें । वह तो स्वयं सूंघता हुआ आ रहा है । ( अङ्गुलि से निर्देश करता है ) ।

( अभियन्ता का प्रवेश )

महराराज देखें—

पहले प्रारूप, फिर द्रव्य, फिर कुछ कुछ निर्माण, पुनः निर्माणध्वंस, पश्चात् द्रव्य यही कहता हुआ प्रभूत वित्त लेता हुआ यह यन्ता जे० ई०, ए० ई०, ई० ई० तथा सी० ई० रूप से नित्य भ्रमण करता हुआ देश के द्रव्य को पैतृक सम्पत्ति मानकर कार्य में लगा है ।

**मूषकराजः** : तीक्ष्णदन्त ! श्रान्तोऽस्मि । अल्पश्रमेण अश्रमेण वा धनाकांक्षिणो दर्शं दर्शं तुष्टोऽस्मि । केवलं शिक्षकं द्रष्टुमिच्छामि । मन्ये, यदि स श्रमशीलः, तदा मूषकसिद्धान्तो व्यर्थतामेष्यति, इयं मे शङ्का ।

**तीक्ष्णदन्तः** : कोशगुप्त ! 'श्रान्तो महाराजः' इति एकम् एव कमप्यद्भुतं, कदाचित्-सन्दर्भ-कर्तनावाप्त-दन्तनैपुण्यम्, अनभ्यासतमस्काण्ड-मलीमसम्, अस्मद्गणाध्यक्षमिव लब्धाध्यक्ष्यम्, सर्वसहात्मजान्वेषणतत्परं वानरेन्द्रमिव लङ्घितदुःस्तरसारस्वतसीमानं, कर्तारमाश्चर्याणां हर्तारमन्तेवासिमेधसां, शिक्षकमूर्धन्यम् उपस्थापय द्राक्तरम् ।

---

**मूषकराज** : तीक्ष्णदन्त ! थक गया हूँ । कम श्रम से या बिना श्रम के धन चाहने वालों को देख देखकर संतुष्ट हूँ । केवल शिक्षक को देखना चाहता हूँ । मानता हूँ कि यदि वह श्रमशील है तो मूषक सिद्धान्त व्यर्थ हो जायगा । ऐसी मेरी शङ्का है ।

**तीक्ष्णदन्त** : कोशगुप्त ! महाराज थक गये हैं, इसलिए किसी एक अद्भुत शिक्षक मूर्धन्य को शीघ्रातिशीघ्र उपस्थित करो जो किसी समय में ग्रन्थो के उद्धरण कुतर कर दाँतों की निपुणता दिखा चुका हो, अभ्यास के अभाव रूपी अन्धकार समूह से स्वयं मलिन हो चुका हो, हमारे गणाध्यक्ष ( गणेश जी ) की अध्यक्षता की तरह अध्यक्षता पा चुका हो, सब कुछ सहने वाली पृथ्वी की पुत्री ( सीता ) के अन्वेषण में लगे वानर श्रेष्ठ ( हनूमान् ) की भाँति पार करने में कठिन सारस्वत ( समुद्र या विद्या ) की सीमा को लाँघ गया हो, आश्चर्यों का करने वाला हो तथा पास में रहने वालों छात्रों की बुद्धि का विनाशक हो ।

( ततः प्रविशति शिक्षकः )

**मूषकराजः** : तीक्ष्णदन्त ! कोऽयं पञ्चजनः ?

**तीक्ष्णदन्तः** : भगवन् ! शिक्षकः । अयन्तु.........

अधीत्य सर्गौ नु किरातमाघयोः
प्रबन्धमेकं विरचय्य हेलया ।
प्रदर्श्य तूष्णीमपि पाठकर्मणि,
महाजनोऽध्यक्षपदं सुशोभते ॥२५॥

**मूषकराजः** : ( प्रसन्नतां प्रदर्शयन् ) साधु वत्स ! साधु । भृशं प्रीतोऽस्मि अस्य दर्शनात् । लब्धं साफल्यं मूषकवैदुष्येण । अयमेव अस्मत्सिद्धान्तरक्षकः । मूषकनैरुक्ता एनं वस्तुतः महाजनं स्वीकुर्वते ' पश्य—मं महत्त्वं विदुषां हन्ति इति महा जं जडतां छात्रेषु नयति इति जनः । महा चासौ जनश्च

---

[ शिक्षक प्रविष्ट होता है ]

मूषकराज : तीक्ष्णदन्त ! यह कौन सा पञ्चजन ( पुरुष है ) ?

तीक्ष्णदन्त : भगवन् ! यह शिक्षक है । यह तो...........

किरात और माघ के एक एक सर्गों को पढ़कर, एक शोध प्रबन्ध को बड़ी सरलता से लिखकर, अध्यापन में चुप्पी दिखाकर यह महाजन अध्यक्ष के पद को सुशोभित कर रहा है ।

मूषकराज : ( प्रसन्नता दिखाते हुये ) बहुत सुन्दर प्यारे ! बहुत सुन्दर । एकदम प्रसन्न हूँ । मूषकों के पाण्डित्य ने सफलता पा ली । यह ही हमारे सिद्धान्तों का रक्षक है । मूषक निरुक्त जानने वाले इसको वस्तुतः महाजन कहते हैं । देखो—म का अर्थ महत्त्व अर्थात् विद्वानों के महत्त्व को जो हनन करे वह महा, ज का अर्थ जडता अर्थात् छात्रों में जो जडता आरोपित करे वह जन । महा चासौ जनः इस विग्रह से महाजन बना । इस

महाजनः। जीवति एतादृशि महाशिक्षके चिरं वर्द्धिष्यते मूषकवैखरी। नास्य समता लोके। अतुलोऽयम्।

तीक्ष्णदन्त! अप्राप्तमाध्यमिकशिक्षस्त्वम् तथापि तुष्टोऽहमन्तश्चेतसा सामान्यमूषकादेय-दलित (DLITT) पदव्या त्वां सभाजयामि। गृहाण। ( वस्त्रादिभिः सह प्रमाणपत्रं ददाति )

( तीक्ष्णदन्तः हस्तौ प्रसार्य वस्त्रादिभिः सह प्रमाणपत्रं गृह्णाति। उत्सुकनेत्रः सन् महाराजं प्रतिनिधींश्च विलोकयति )

किं ते भूयः प्रियमुपकरोमि।

तीक्ष्णदन्तः : सर्वं सम्पन्नम् आर्य! तथापि इदमस्तु अस्मदतिवृद्धप्रपितामहगोष्ठीगरिष्ठस्य रङ्गाचार्यस्य वाक्यम्—

---

प्रकार के महाशिक्षक के रहते मूषकों की वाणी चिरकाल के लिए बढ़ेगी। इस लोक में इसकी समता नहीं है। यह तुलाविहीन है।

तीक्ष्णदन्त! तुमने माध्यमिक शिक्षा भी नहीं पाई है। फिर भी अपने अन्तःकरण से तुष्ट होकर साधारण मूषकों को अदेय दलित की उपाधि से तुम्हें विभूषित कर रहा हूँ। स्वीकार करो। ( वस्त्र आदि के साथ प्रमाणपत्र देता है )।

( तीक्ष्णदन्त हाथ फैलाकर वस्त्र आदि के साथ प्रमाणपत्र लेता है तथा उत्फुल्ल नेत्र होकर महाराज और प्रतिनिधियों को देखता है )

फिर बताओ, तुम्हारा क्या प्रिय करूँ

तीक्ष्णदन्त : सब सम्पन्न है, आर्य! फिर भी हम लोगों के अतिवृद्धप्रपितामह की गोष्ठी के प्रमुख रङ्गाचार्य का यह वाक्य परिपूर्ण हो—

प्रजाहिते दत्तवचांसि भङ्क्त्वा,
धनग्रहः स्यान् नियमान् विधाय ।
विजृम्भतामाखुनयो धरित्र्याम्
.........॥२६॥

(इत्यर्द्धोक्ते एव साशङ्कं पश्यति)
किं शब्द इव श्रूयते ? आयाति कश्चिद् विडालः ?

कोशगुप्तः : (बहिर्विलोक्य ससम्भ्रमम्) अये ! ज्वलदर्कसन्निभः, गृहीतत्रिशूलः, भस्मच्छन्नशरीरः, कश्चिद् अपरशङ्कर इव बालकेनैकेन अनुगम्यमानः इत आगच्छति ।

मूषकराजः : (कृतत्वर इव) अपरशङ्कर इव ? तर्हि पलायध्वम् । तत्सुतकृपयैव वयं जीवामः । कदाचित् स न क्रुध्येत् । तदर्थं यतनीयम् । सिद्धान्तप्रचारः भवतु वा न भवतु । पलायने को दोषः । अन्ततस्तु वयं मूषका एव । गृहीत

---

प्रजा के हित में पुराने दिये गये वचनों को तोड़कर कानून बनाकर धन का ग्रहण हुआ करे । इस पृथ्वी पर मूषकों की नीति विजयिनी.........

(आधा ही कहे जाने पर आशङ्का के साथ देखता है)

क्या शब्द के समान सुनाई पड़ रहा है । क्या कोई विडाल आ रहा है ?

कोशगुप्त : (बाहर देखकर सम्भ्रम के साथ) अरे । प्रकाशमान सूर्य के समान, त्रिशूल लिये हुए, शरीर में भस्म लगाये, दूसरे शङ्कर के समान कोई व्यक्ति एक बालक के साथ इधर आ रहे हैं ।

मूषकराज : (शीघ्रता करता हुआ सा) दूसरे शङ्कर के समान ? तो तुम सभी भगो । उसके सुत की कृपा से ही हमलोग जी रहे हैं । कहीं वह न क्रुद्ध हो जाँय । उसके लिए प्रयत्न करना चाहिए । सिद्धान्त का प्रचार हो या न हो । भागने में क्या दोष है ।

मोदकभाण्डाः पलायध्वम्। पलायध्वम्। ( सर्वे पलायन्ते )।

( ततः प्रविशति कश्चित् तपस्वी बालकेन एकेन अनुगम्यमानः )

तपस्वी : किशोर ! इदं किमस्ति ?

किशोरः : भगवन् ! स्थलदर्शनात् प्रतीयते यत्, मूषकैः क्रियमाणे कस्मिश्चिद् अभिनये भरतवाक्यं न पूर्णम्। शारदायै निवेदनाय प्रयोज्येयं स्रक् स्वस्थाने एव स्थिताऽस्ति।

तपस्वी : तर्हि तामानय।

( आनीतां स्रजं गृह्णन् )

भूयस्त्वं वद। किं ते प्रियमुपकरोमि ?

किशोरः : आर्य ! त्वयि जाग्रति किमपि नाप्रियम्। तथापि इदमस्तु भरतवाक्यम्—

---

आखिरकार हम मूषक ही तो हैं। लड्डूओं का बर्तन लेकर भागो, भागो। ( सभी भाग जाते हैं )

( एक बालक को साथ लिये किसी तपस्वी का प्रवेश होता है। )

तपस्वी : किशोर ! यह क्या है ?

किशोर : भगवन् ! इस स्थल को देखने से पता चलता है कि मूषकों के द्वारा किये जा रहे किसी अभिनय में भरतवाक्य पूर्ण नहीं हो पाया है। शारदा के निवेदन के लिये प्रयुक्त होने वाली माला अपने स्थान पर ही रखी हुई है।

तपस्वी : तो उसे लाओ।

( लाई हुई माला को लेकर )

अब पुनः तुम बताओ। तुम्हारा क्या प्रिय करूँ ?

किशोर : आर्य ! आपके रहते मेरा अप्रिय कुछ भी नहीं है। तथापि यह भरतवाक्य पूर्ण हो—

स्वीयानां प्रतिपालने विजयतां वृत्तिर्गवां मोददा
संग्रामे प्रतिपक्षिभिर्विजयतां वृत्तिर्वृकाणां सदा ।
चाणक्यस्य नयो ध्रुवं विजयतां ज्ञानं भवेत् पाणिनेः
वृत्तिर्माऽस्तु च भारते क्वचिदपि श्वानाखुवालेयगा ।२७।

तपस्वी : ( स्रजं शारदायै समर्पयन् ) तथास्तु ।

( उभौ मन्दं मन्दं गच्छतः )
(नेपथ्ये गानं भवति)

यस्याङ्घ्रिसेवनमहो निजजन्मसारं
लङ्कापतिर्दशमुखो नितराममंस्त ।
यस्यास्ति गाङ्गजलपूर्णजटा हिमाद्रिः
देवः स भारतवपुर्जयताद् गिरीशः ॥ २८ ॥

शुभमस्तु

---

अपने लोगों के पालन में गायों की आनन्द देने वाली वृत्ति विजयिनी हो तथा प्रतिपक्षियों से युद्ध में वृकों की वृत्ति विजयिनी हो । चाणक्य की नीति की जय हो तथा पाणिनि के ज्ञान का विकास हो । पर इस भारत में कुत्तों, चूहों तथा गदहों की वृत्ति कभी न हो ।

तपस्वी : ( शारदा के लिए माला अर्पित करते हुये ) ऐसा ही हो ।

( दोनों धीरे-धीरे जाते हैं )
(नेपथ्य में गान होता है)

लङ्काधिपति दशग्रीव जिसके चरणों की सेवा को पूर्णतया अपने जन्म का फल मानता था, यह हिमाद्रि ही गंगा के जल से परिपूर्ण होकर जिसकी जटा बनता है वह भारत रूप भगवान् गिरीश्वर विजयी हों । शुभ हो

जमुईपण्डितग्रामे गोरखपुरमण्डले
वसतो ग्रन्थकर्तुः स्याद् ग्रन्थोऽयं बुधहर्षदः ।

●

# श्लोकानुक्रमणी